# shrI vishvasArokta baTuka bhairava pa njara stotram

# श्री विश्वसारोक्त बटुकभैरवपञ्जरस्तोत्रम्

## Sanskrit Document Information



Text title : baTukabhairavapanjara

File name : baTukabhairavapanjara.itx

Category : shiva, panjara

Location : doc_shiva

Transliterated by : Gopal Upadhyay gopal.j.upadhyay at gmail.com

Proofread by : Gopal Upadhyay gopal.j.upadhyay at gmail.com

Description/comments : Vishvasaratantra

Latest update : October 1, 2018

Send corrections to : Sanskrit@cheerful.com



October 1, 2018

*sanskritdocuments.org*

shrI vishvasArokta baTuka bhairava pa njara stotram

# श्री विश्वसारोक्त बटुकभैरवपञ्जरस्तोत्रम्



श्रीगणेशाय नमः ।
श्रीउमामहेश्वराभ्यां नमः ।
श्रीगुरवे नमः ।
श्रीभैरवाय नमः ।
देव्युवाच ।
देवदेव महादेव भक्ताभीष्टप्रदायकः ।
पूर्वं मे सूचितं नाथ ब्रूहित्वं कृपयाधुनाम् ॥ १॥

पञ्जरं बटुकस्यैव सर्वसिद्धिप्रदायकम् ।
साधकानां हितार्थाय प्रकाशं कुरु भैरव् ॥ २॥

भैरव उवाच ।
श्रृणु देवि प्रवक्ष्यामि बटुकस्य च पञ्जरम् ।
पञ्जरस्यास्य देवेशि बृहदारण्यको ऋषिः ।
छन्दोऽनुष्टुप् देवेशि बटुको नाम देवता ॥ ३॥

ह्रीं बीजं बटुकायेति शक्तिस्तु परिकीर्तिता ।
प्रणवं कीलकं प्रोक्त मागमज्ञैर्विनिश्चितम् ।
सर्वार्थसाधने देवि विनियोगः परिकीर्तितः ॥ ४॥

अस्य श्रीबटुकभैरवपञ्जरस्य बृहदारण्यक ऋषिः ।
अनुष्टुप् छन्दः । श्री बटुक भैरवः देवता । ह्रीं बीजम् ।
बटुकायेति शक्तिः । प्रणवः कीलकम् ।
सर्वार्थ साधने (सर्वाभीष्टसिद्ध्यर्थे जपे/पाठे) विनियोगः ॥

बटुकोव्याच्छिरोदेशेललाटेभैरवेश्वरः ।
कपोलौक्षेत्रपालश्चभूभागेचासिताङ्गकः ॥ ५॥

खट्वाङ्गधारीनासायां नेत्रयोर्भूतनायकः ।

उर्ध्वोष्टे(ष्ठे)रुरुनाथश्चाधरोष्टे(ष्ठे)धनेश्वरः ॥ ६॥

चिबुकेकुलनाथोव्यान्महेशोमुखमण्डले ।
क्षेत्रेशोकण्ठदेशोव्यात्स्कन्धयोर्वासिनीपतिः ॥ ७॥

हृदयेकामनाथोव्यात्काम्यघ्नोभुजमण्डले ।
पाणौरक्षेन्महाकालोमार्तण्डोचाङ्गुलीषुच ॥ ८॥

उदरेकालकालोव्यात्सर्वज्ञोनाभिमण्डले ।
रक्ताक्षोलिङ्गव्यातण्डकोषेसुरेश्वरः ॥ ९॥

कट्यांशूलभृत्पातुवस्तिदेशेअघान्तकः ।
घोरान्तकोपातुचोर्धोर्जघनेशत्रुतापनः ॥ १०॥

पादयोः पातुकन्दर्पो कल्पान्तो चाङ्गुलीषु च ।
आकेशात्पादपर्यन्तं पातुमां भैरवेश्वरः ॥ ११॥

प्रतीच्यां पातु भूतेशो याम्ये बलिहरोऽवतु ।
प्राच्यां कालविधिः पातु उदीच्यां प्रथमेश्वरः ॥ १२॥

आग्नेय्यां च शिखी पातु नैरृत्यां प्रेतयोऽवतु ।
वायव्यां प्राणदः पातु एशान्यामीश्वरोऽवतु ॥ १३॥

इतीदं पञ्जरं देवि सर्वमन्त्ररहस्यकम् ।
पठनात्पाठनाद्देवि स्वयं सिद्धिश्वरो भवेत् ॥ १४॥

प्रातःकाले पठेद्यस्तु मुच्यते व्याधिबन्धनात् ।
भानौ मध्ये गते यस्तु पठनाद्धनवान्भवेत् ॥ १५॥

सायङ्काले प्रपठनात्सर्वसिद्धिमवाप्नुयात् ।
अर्धरात्रे पठेद्यस्तु श्रुतिस्तद्गत्मानसः ॥ १६॥

साक्षाद्भैरवरुपोऽसौ जायते भुवि मानवः ।
पञ्जरं भूर्जपत्रेषु चाष्टाङ्गन्धेनलेखयेत् ॥ १७॥

धारयेत्करकण्ठेचबाह्वोशिरसि यं पुमान् ।
तस्यसर्वार्थसिद्धिः स्यान्नात्रकार्याविचारणात् ॥ १८॥

शत्रुदस्यु भयं नैव नैव भूतादिजं भयम् ।
अस्यधारण मात्रेण साधको भुवि जायते ॥ १९॥

अज्ञात्वा पञ्जरं देवि अज्ञात्वा कूटपञ्जरम् ।
नाधिकारीभवेत्सोऽपि अजप्त्वा नरकं व्रजेत् ।
तस्मात्पठेत्सदाभक्त्या पातकान्मुच्यते ध्रुवम् ॥ २०॥

॥ इति श्रीविश्वसारोक्त बटुकभैरवपञ्जरं सम्पूर्णम् ॥

Encoded and proofread by Gopal Upadhyay gopal.j.upadhyay at gmail.com

*shrI vishvasArokta baTuka bhairava pa njara stotram*

pdf was typeset on October 1, 2018



